**इति कल्प्यत इति चेन्न; सिद्धाऽसिद्धाभ्यां कल्पनागौरव-स्याऽदूषकत्वात् । किञ्च– देशान्तरस्थितव्यक्तिभाने न भ्रमः प्रमाणम्, नाऽपि बाधः, नाऽपि मानान्तरम् । तथा चाऽगत्या-ऽपूर्वव्यक्त्युत्पादः स्वीकार्यः । लाघवात्तदेव भासत इति–चेन्न; द्वितीयस्य प्रतियोगिनोऽनुपस्थितौ लाघवाऽनिरूप-णात्, तद्रजतचाक्षुषज्ञाने तद्रजतचक्षुःसंयोगस्यैव कारणत्वे-नाऽन्यथाख्यातेर्हेत्वभावेनाऽसंभवाच्च । रजतरङ्गयोः "इमे**

जाये तो कल्पनागौरव नही होगा । इसलिये वही प्रसिद्ध रजत ही यहा प्रतीत होता है ऐसी कल्पना की जाती है ।

समाधान ऐसा नही होगा, क्योंकि सिद्ध और असिद्ध के द्वारा अर्थात् असिद्ध की अपेक्षा मे सिद्ध के लिये कल्पनागौरव दूषक नही होता (अभिप्राय यह है कि सिद्ध वस्तु के लिये कितनी ही कल्पना की जाये, तो भी कल्पनागौरव दोष नही माना जाता, किन्तु असिद्ध वस्तु की सिद्धि करने में जो कल्पना की जाती है, उसमे ही लाघव और गौरव देखे जाते है और लाघव मे सिद्धि सभव होने पर अधिक कल्पना गौरवदोष माना जाता है । यहा भ्रम-स्थल मे अन्यत्र स्थित रजत का पुरोवर्तित्वेन भान होना असिद्ध है और अनुभव मे रजत पुरोवर्तित्वेन सिद्ध है । अत उस सिद्ध रजत की अनुकूल कल्पना करने मे चाहे जितनी भी की जाय, उसमे दोष नही होता) । किञ्च देशान्तरस्थित व्यक्ति के भान मे न भ्रम प्रमाण है, न बाध ही प्रमाण है तथा उसमे प्रमाणान्तर भी नही है । तब तो अगत्या अपूर्व व्यक्ति की उत्पत्ति ही माननी होगी । शका– लाघव होने से देशान्तरस्थ रजत ही प्रतीत होता है । उत्तर नही; क्योंकि दूसरी विरोधिनी कल्पना की उपस्थिति न होने पर लाघव का निरूपण नही किया जा सकता । और देशान्तरस्थ रजत के चाक्षुष ज्ञान मे उस रजत के साथ नेत्र का सयोग कारण है; उस कारण का अभाव होने से अन्यथाख्याति तो हो नही सकती । रजत और रङ्ग में "ये दोनों रङ्ग और रजत है" इस भ्रम मे (अर्थात् सामने स्थित

**रङ्गरजते" इति भ्रमे संभवन्नपि तादृशः संयोगो दोषप्रतिबन्धान्न जनकः। अन्यथा गुणजन्यत्वेन प्रमात्वाऽऽपातादित्यद्वैतसिद्धौ विस्तरः।**

**विप्रतिपत्तिरपि तत्र—रजतत्वं पारमार्थिकत्वेनाऽभिमतरजतव्यक्तिभिन्नव्यक्तिवृत्ति न वा ? प्रयोगश्च— रजतत्वं पारमार्थिकत्वाऽभिमतरजतव्यक्तिभिन्नव्यक्तिवृत्ति, सकलरजतवृत्तिजातित्वात्, यदेवम्, तदेवम्, यथा सत्तादि, तथा**

रजत और रङ्ग में रजत को रङ्ग और रङ्ग को रजत समझ कर भ्रम होने से) उस प्रकार का नेत्रसंयोग सम्भव होने पर भी दोष से प्रतिबन्ध होने के कारण वह भ्रमज्ञान का जनक नहीं होता। यदि नेत्रसयोग को जनक मान लिया जाये तो गुणजन्य होने से भ्रमज्ञान भी प्रमा होने लगेगा (यहां पर प्रमा के असाधारण कारण इन्द्रियसन्निकर्ष, व्याप्तिज्ञान आदि के लिये प्रयुक्त गुणशब्द पारिभाषिक है)। यह विषय अद्वैतसिद्धि में विस्तार से कहा गया है।

इस भ्रम के विषय में यह विप्रतिपत्ति भी है (विरुद्ध कोटिद्वय के उपस्थापक वाक्य का नाम विप्रतिपत्ति है) रजतत्व पारमार्थिक रूप से अभिमत रजतव्यक्ति से भिन्न व्यक्ति में भी है या नहीं ? (भाव यह है कि अनिर्वचनीयख्यातिवादी वेदान्ती भ्रम में भासमान रजत को प्रातिभासिक मिथ्या मानते हैं। तब सन्देह होता है कि लोकप्रसिद्धरजतनिष्ठरजतत्व उस प्रतिभासिक रजत में है अथवा नहीं ? इसमें अन्यथाख्यातिवादी नैयायिक कहते हैं कि उसमें लोकप्रसिद्धरजतत्व हो ही नहीं सकता। इसके उत्तर में सिद्धान्ती का आगे अनुमान है)। अनुमान का प्रयोग इस प्रकार है— रजतत्व पारमार्थिकरूप से अभिमत रजतव्यक्ति से भिन्न व्यक्ति में भी है, क्योंकि वह सकलरजतवृत्तिजाति है; जो सकलरजतवृत्तिजाति है, वह पारमार्थिकरूप से अभिमत रजतव्यक्ति से भिन्न व्यक्ति में भी रहती है, जैसे सत्ताजाति, उसी प्रकार यह रजतत्व भी है, इसलिये वैसा ही

**चेदम्, तस्मात्तथा । न च– रजतमात्राऽवृत्तित्वमुपाधिः; पक्षमात्रव्यावर्तकत्वेन पक्षेतरत्वादनुपाधिवत्त्वात्; नाऽपि रजतभिन्नवृत्तित्वम्, उक्तदोषात् । न चाऽप्रयोजकम्; प्रसिद्ध-**

होना चाहिये। शका इस अनुमान मे "रजतमात्राऽवृत्तित्व" उपाधि है। समाधान– नही, क्योंकि वह पक्षमात्र का व्यावर्तक होने के कारण पक्षेतरत्व के समान होने से उपाधि नही हो सकता। और "रजतभिन्नवृत्तित्व" भी उपाधि नही; कारण कि वह भी पूर्वोक्त दोष से ग्रस्त है (अभिप्राय यह है कि किसी अनुमान मे उपाधि लग जाये तो उस अनुमान से साध्य की सिद्धि नही हो सकती, क्योंकि उपाधि पक्ष मे साध्य का अभाव सिद्ध करती है, अथवा हेतु और साध्य मे व्यभिचार बनाती है। पक्षेतरत्व से भिन्न हो और साध्य का व्यापक होता हुआ साधन का अव्यापक हो, ऐसा पदार्थ का नाम उपाधि है। उपाधिग्रस्त किसी अनुमान मे उपाधि घटाने की रीति यह है कि दृष्टान्त मे उपाधि का साध्यव्यापकत्व और पक्ष मे साधनाव्यापकत्व घटाना चाहिये। जैसे कि प्रकृत अनुमान मे रजतमात्राऽवृत्तित्व और रजतभिन्नवृत्तित्व– ये दो उपाधि दी गई है। ये दोनो ही उपाधि दृष्टान्त सत्ताजाति मे है, क्योंकि सत्ताजाति रजतमात्र मे नही किन्तु अन्य पदार्थो मे भी है, इसी प्रकार रजत-भिन्नवृत्तित्व भी सत्ताजाति मे है। अत दृष्टान्त मे पारमार्थिकत्वाभिमतरजतव्यक्तिभिन्नव्यक्तिवृत्तित्वरूप साध्य का व्यापक दोनो उपाधि सिद्ध है, इसी प्रकार पक्षरजतत्व मे दोनो ही उपाधि न होने से और सकलरजतवृत्तिजातित्वरूप हेतु होने से साधनाव्यापकत्व भी दोनो मे सिद्ध है। इस प्रकार उपाधिसमन्वय होने पर पक्ष मे उपाधि के अभाव से साध्य का अभाव भी सिद्ध होता है, क्योंकि उपाधि साध्य का व्यापक है; जहा व्यापक का अभाव होता है, वहा व्याप्य साध्य का अभाव भी स्वतः ही सिद्ध है। और इस से ही हेतु और साध्य मे व्यभिचार भी जाना जाता है। अत. उपाधिग्रस्त अनुमान से पक्ष मे इष्ट साध्य की सिद्धि नही हो सकती। और उपाधि के लक्षण मे "पक्षेतरत्वभिन्न" विशेषण इसलिये दिया गया

**व्यक्तिभाने प्रमाणाऽभावात्, व्यक्त्यन्तराऽनुत्पादे च निर्विषयज्ञानाऽनुत्पत्तेरेव बाधकतर्कस्य विद्यमानत्वात्। यतः पठन्ति– "अर्थेनैव विशेषो हि निराकारतया धियाम्" (न्या० कु० ४।४) इति। इत्थंभूतलक्षणे चेयं तृतीया। तथा चाऽर्थरूप एव विशेषः। न च– शुक्तिरेव विषयः; रजतस्याऽनुभवसाक्षित्वात्। अथ--दोषवशाद्देशान्तरस्थितैव व्यक्तिर्भासते; दोषस्य च भ्रमनियामकत्वमुभयवादिसिद्धमिति– चेत्, तर्हि दोषस्य भ्रमोत्पादकत्ववत्तद्विषयोत्पादकत्वमप्यस्त्वविशे-**

है कि पक्षेतरत्व सदा ही साध्य का व्यापक और साधन का अव्यापक होता है। अतः प्रत्येक अनुमान में पक्षेतरत्व उपाधि लगा दी जाये तो अनुमानमात्र का उच्छेद हो जायेगा। इसलिये उसको अलग किया गया है। और पक्षेतरत्व का अर्थ ही पक्षमात्र को व्यावृत्त करना है। अतः इस दृष्टि को लेकर यहाँ पर समाधान किया गया है कि ये दोनों ही कथित उपाधि पक्षेतरत्व के समान है, क्योंकि ये दोनों पक्षमात्र को व्यावृत्त करने वाली हैं; अतः उपाधि नहीं हो सकती)। तथा हेतु अप्रयोजक (साध्य और साधन की व्यभिचार-शंका होने पर उस के बाधकतर्क से रहित) भी नहीं; क्योंकि भ्रम में प्रसिद्ध रजतपदार्थ के भान होने मे कोई प्रमाण नहीं; और रजतव्यक्त्यन्तर की उत्पत्ति न होने पर निर्विषयक ज्ञान की अनुत्पत्ति का प्रसङ्ग होगा यह बाधक तर्क विद्यमान है। उदयनाचार्य जी ने कहा भी है "निराकार होने के कारण ज्ञान में अर्थ ही विशेष है" यहाँ पर "अर्थेन" इस में इत्थभूतलक्षण (यह पदार्थ ऐसा ही है इस प्रकार ज्ञापन करने) में तृतीया है। इसलिये "ज्ञान में अर्थरूप ही विशेष है" यह जाना जाता है। शंका "इदं रजतम्" इस भ्रम में शुक्ति ही विषय है। उत्तर– नहीं; रजत ही भ्रम के विषय होने में अनुभवरूप साक्षी है। शंका— दोषवश देशान्तरस्थित रजतव्यक्ति ही भ्रम में प्रतीत होती है। और दोष को भ्रम का नियामक दोनों वादी मानते ही हैं। उत्तर - तब तो जिस प्रकार दोष भ्रम का उत्पा-

**षात्। न चैवं सति गौरवम्; प्रतीतेरेव वस्तुसाधिकाया विद्यमानत्वात्, गौरवप्रतियोगिनोऽनुपस्थितेः, सिद्ध्यसिद्धि-पराहतत्वाच्च। अथाऽन्यत्र ज्ञानकारणस्य विषयोत्पादकत्व-मदृष्ट चक्षुरादौ, तथा च कथं तत्कल्पनीयमिति चेत्; तर्ह्यन्यत्र भ्रमजनकत्वमपि न दृष्टमिति तदपि न कल्पनीय-मिति जितमख्यातिवादिनेति। अथ– दोषस्य स्वविषयज्ञान-जनकत्वं क्लृप्तम्, भ्रमस्याऽपि च ज्ञानत्वमस्त्येवेति चेत्, तर्हि तस्य स्वनिष्ठगुणजनकत्वमन्ततः स्वध्वंसजनकत्वमपि क्लृप्तमिति तुल्यम्। दृष्टत्वमात्रस्याऽप्रयोजकत्वाच्च। तस्मात्– "वाच्याऽन्यथोपपत्तिर्वा त्याज्यो वा दृष्टताग्रहः।**

दक है, उसी प्रकार विषय का उत्पादक भी हो, क्योंकि दोनों में कोई अन्तर नहीं। शंका ऐसा मानने पर गौरव होता है। उत्तर ऐसा नहीं, क्योंकि यहाँ वस्तुसाधिका प्रतीति विद्यमान है, और गौरव के विरोधी प्रमाणादि की उपस्थिति भी नहीं तथा वस्तु की सिद्धि की अपेक्षा से असिद्धि में लाघवयुक्ति पराहत हो जाती है। शंका भ्रम से भिन्नस्थल में ज्ञानकारण की विषयोत्पादकता चक्षुरादि में कहीं देखी नहीं गई तब तो भ्रमज्ञानकारण दोष विषयोत्पादक किस प्रकार कल्पनीय हो सकता है? उत्तर– तब तो जैसे तुम कहते हो, वैसे ही अन्यस्थल में ज्ञानकारण चक्षुरादि की भ्रम-जनकता नहीं देखी गई है, अतः भ्रमजनकता भी कल्पनीय नहीं। इस प्रकार से तो तुम सर्वज्ञानयथार्थवादी (अख्यातिवादी) मीमांसक के द्वारा जीते गये। शंका— दोष का स्वविषयज्ञानजनकत्व सिद्ध है। और भ्रम भी ज्ञान ही है, अतः अख्यातिवाद का प्रसङ्ग नहीं होगा। उत्तर तब तो दोष की स्वनिष्ठगुणजनकता और अन्ततः स्वध्वंसजनकता भी सिद्ध है– इस प्रकार तुल्य ही हुआ। और दृष्टत्वमात्र भी वस्तुसिद्धि में प्रयोजक नहीं होता। अतः कहा भी है-- "या तो आपको भ्रमविषयीभूत रजतादि की अन्यथा उपपत्ति

**नह्येकत्र समावेशश्छायाऽऽतपवदेतयोः ॥" (खं.का. १।७)**
**इति। किञ्च– मिथ्याभूतव्यक्त्यनङ्गीकारे व्यधिकरणप्रकार-ज्ञानमात्रस्वीकारे "मिथ्या रजतं मया दृष्टम्" इत्याद्यर्थ-गतं न व्यवह्रियेत। रजतत्वेन शुक्तिर्ज्ञाता– इत्येव तस्यार्थ इति–चेन्न; रजतधर्मिकमेव मिथ्यात्वमनुभूयते, न त्वन्यत्। तथा चाऽनुभवाऽपलापे न किमपि भवतः सिद्ध्येदितिजितम-सद्वादिना।**

**किञ्च– ज्ञानस्य मिथ्यात्वेनैव, तदस्वीकारे च तस्या-ऽप्यस्वीकार एवोचितः। न च– व्यधिकरणप्रकारत्वमेव मि-थ्यात्वम्, न त्वन्यदिति– साम्प्रतम्; लौकिकमिथ्यापदार्थ-**

कहनी होगी, या दृष्टता का आग्रह छोड़ना होगा। एक में ही देशान्तरस्थत्व और प्रत्यक्षविषयत्व दोनों का समावेश छाया और आतप के समान नहीं हो सकता।" किञ्च- मिथ्याभूत रजतादि पदार्थ अङ्गीकार न करके व्यधिकरणप्रकारविषयक ज्ञान ( शुक्ति में रजतत्वप्रकारकज्ञान ) मात्र मानोगे तो "मैंने मिथ्या रजत देखा" इत्यादि पदार्थविषयक ज्ञान का व्यवहार नहीं होना चाहिये। शंका– "मैंने रजतरूप से शुक्ति को जाना" यह उस वाक्य का अर्थ है। उत्तर– ऐसा नहीं; क्योंकि इस वाक्य से रजतधर्मिक मिथ्यात्व का ही अनुभव होता है; अन्य नहीं। इस प्रकार से अनुभव का अपलाप करोगे तो तुम्हारा कुछ भी सिद्ध नहीं होगा, तब तो तुम असद्वादी बौद्ध के द्वारा जीते गये हो।

किञ्च ज्ञान मिथ्या होने से ही उसका विषय रजत भी मिथ्या है; और यदि रजत को मिथ्या नहीं मानोगे तो ज्ञान का मिथ्यात्व अस्वीकार करना भी उचित ही होगा। शंका– ठीक है, व्यधिकरणप्रकारत्व (शुक्ति में रजतनिष्ठरजतत्व विशेषण होना) ही मिथ्यात्व है, और कोई दूसरा नहीं (अतः ज्ञान मिथ्या होने पर भी रजत मिथ्या नहीं होगा)। समाधान– यह कथन अयुक्त है; क्योंकि

**त्यागे पारिभाषिकत्वाऽऽपत्तेः, अनुभवस्य च व्याख्याय प्रदर्शयितुमशक्यत्वात्। किञ्च– व्यधिकरणप्रकारत्वमसिद्धम्; रजतत्वस्य रजताऽधिकरणस्यैव इह भासमानत्वात्। अथ– विशेष्याऽवृत्तिप्रकारत्वं च तत्र विशेषणमिति–चेन्न; रजतस्याऽपि क्वचिद्विशेष्यत्वात्। अथ– यत्र ज्ञाने यद्विशेष्यम्, तत्र तदवृत्तिधर्मप्रकारत्वमिति– चेन्न; अननुगमापत्तेः। न च– इष्टापत्तिः, लक्ष्यस्याऽप्यननुगतत्वादिति–वाच्यम्; तथा सति लक्ष्यतावच्छेदकस्यैकस्य धर्मस्याऽनुक्तौ तास्वननुगतासु व्यक्तिषु लक्षणस्य ज्ञातुमशक्यत्वेनेतरभेदानुमानाऽसंभवात्।**

लोकप्रसिद्ध मिथ्यापदार्थ का त्याग करने पर वह (व्यधिकरणप्रकारत्वरूप मिथ्यात्व) पारिभाषिक मात्र हो जायेगा, और अनुभव का व्याख्यान करके प्रदर्शन करना असम्भव है। किञ्च व्यधिकरणप्रकारता भी असिद्ध है, क्योंकि रजताधिकरणक रजतत्व ही यहां (भ्रम में) भासमान होता है। शंका 'इदं रजतम्' इस भ्रम में विशेष्य में अवृत्ति प्रकारत्व ही विशेषण है (यहां विशेष्य इदं पदार्थ है उसमें अवृत्ति प्रकारत्व रजतत्व है उस रजतत्व विशेषण से विशिष्ट होकर इदं पदार्थ भासमान है। अतः व्यधिकरणप्रकारत्व भ्रम में है)। उत्तर नहीं, क्योंकि रजत भी तो कहीं विशेष्य होता है (अतः रजताधिकरणक रजतत्व ही भ्रम में भासमान है)। शंका जिस ज्ञान में जो विशेष्य है, उस ज्ञान में उस विशेष्य में अवृत्तिधर्मप्रकारत्व विवक्षित है। समाधान नहीं, ऐसा मानने पर अननुगम दोष होगा (क्योंकि तुमने "यत्तत्" का प्रयोग किया है)। शंका यह अननुगम तो हमें इष्ट है, कारण कि हमारा लक्ष्यपदार्थ अननुगत है। उत्तर ऐसा कथन अयुक्त है, क्योंकि ऐसा होने पर एक लक्ष्यतावच्छेदक (लक्ष्य के व्यावर्तक) धर्म का कथन असम्भव होने से उस अननुगत व्यक्तियों में लक्षण का ज्ञान करना भी असम्भव होगा। तब तो अप्रमाज्ञान के इतरभेद का अनुमान भी

**अप्रमा इतरेभ्यो भिद्यते, अप्रमात्वात्– इत्यत्र यद्यप्रमात्वं नैकम्, तर्हि हेतोर्भागासिद्धत्वापत्तिः। पक्षतावच्छेदकञ्च यदि तदेव, तदा तन्नानात्वेनाऽवच्छेदकत्वाऽनुपपत्तिः। व्याप्तिग्रहसमय एव पक्षतावच्छेदकधर्मसामानाधिकरण्यं साध्यं सिद्धमिति किमनुमेयं च स्यात्? न च विसंवादिप्रवृत्तिजननयोग्यत्वं पक्षतावच्छेदकम्; अनुगतधर्माऽज्ञाने योग्यताया दुर्ज्ञानत्वात्; उक्तरूपस्य धर्म्यंशेऽपि भावात्, तत्र साध्ये बाधात्। नापि प्रमाभिन्नज्ञानत्वम्, असम्भवात्, धर्म्यंशे प्रमा-**

नहीं हो सकेगा। अप्रमा अन्यों से भिन्न है क्योंकि उसमें अप्रमात्व है इस अनुमान में यदि अप्रमात्व एक (अनुगत धर्म) नहीं है तो हेतु में भागाऽसिद्धि की आपत्ति आयेगी। (सामान्यरूप से गृहीत पक्षान्तर्गत अप्रमाओं में से किसी में अप्रमात्व हेतु रहने पर भी वह अननुगत धर्म होने के कारण किसी अप्रमा में नहीं रहेगा। अतः पक्षैकदेश में अप्रमात्व हेतु स्वरूपासिद्ध है)। और यदि पक्षतावच्छेदक (पक्ष का व्यावर्तक धर्म) भी वही अप्रमात्व है तो वह नाना होने से अवच्छेदक ही नहीं हो सकता। तथा पक्षतावच्छेदक धर्म और हेतु एक होने पर तो व्याप्तिग्रह समय में ही पक्षतावच्छेदकधर्म के साथ समानाधिकरण होकर साध्य सिद्ध हो जाने से अनुमेय क्या रहेगा? (क्योंकि अनुमान करने के पहले ही पक्ष में हेतु और साध्य दोनों सिद्ध हो जाते हैं) शंका विसंवादि (निष्फल) प्रवृत्तिजननयोग्यता पक्षतावच्छेदक है, अप्रमात्व नहीं। उत्तर नहीं, क्योंकि योग्यतावच्छेदक अनुगत धर्म के ज्ञान के बिना योग्यता का ज्ञान भी होना असम्भव है (क्योंकि योग्यता को बोधन कराने वाले कोई एक धर्म के बिना अमुक पदार्थ योग्य और अमुक तो अयोग्य है ऐसा निर्धारण नहीं किया जा सकता)। और विसंवादिप्रवृत्तिजननयोग्यता तो धर्म्यंश ("इदं रजतम्" इसमें इदमंश) में भी है, यदि उसमें साध्य सिद्ध करोगे तो बाध होगा। और प्रमाभिन्नज्ञानत्व भी पक्षतावच्छेदक नहीं, क्योंकि धर्म्यंशज्ञान (इदमंशज्ञान) में प्रमात्व होने से असम्भव है।

त्वात् । अथ–हेतुतावच्छेदकमप्रामाण्यम्, तदैक्याच्च धूमवद्धे-तुत्वोपपत्तिरिति– चेत्; तदेव किमिति विचारमर्हति । न तावज्जातिः, अनभ्युपगमात् । नाऽप्युपाधिः, अनिर्वचनात् । अप्रमामात्रवृत्तित्वमिति– चेन्न; अप्रामाण्यस्य नानात्वेनैकस्य सकलाऽप्रमावृत्तित्वाऽभावात् । नाऽप्यप्रामाण्यशब्दाभिधेय-त्वम्; अनुगतरूपाऽभावे तस्याऽप्यसम्भवात् । अथ– तदभाव-वति तत्प्रकारकज्ञानत्वमप्रामाण्यम्; तथा च ज्ञानत्वस्याऽनु-गमात्तदनुगमः । अत एव परम्परासंबन्धा जातिरेवोपाधिरु-च्यत इति–चेन्न; ज्ञानत्वस्य प्रमावृत्तित्वेनाऽप्रामाण्यवृत्ति-

शंका हेतुतावच्छेदक अप्रामाण्य है, उसके साथ ऐक्य होने से धूम के समान अप्रमात्व हेतु हो सकता है (धूमवत्ता और धूम में ऐक्य है अतः धूम भी हेतु होता है, उसी प्रकार अप्रामाण्य और अप्रमात्व में ऐक्य होने से अप्रमात्व हेतु हो सकता है)। उत्तर वह अप्रा-माण्य ही क्या है यह विचारणीय है। वह जाति तो है नहीं; क्योंकि तुमने उसका जातित्व नहीं माना है। उपाधि भी नहीं, कारणकि उसका निर्वचन नहीं हो सकता। शंका अप्रमामात्र-वृत्तित्व अप्रामाण्य है। उत्तर नहीं, अप्रामाण्य नाना होने से एक अप्रामाण्य की सकल अप्रमा में वृत्ति नहीं हो सकती। और वह अप्रामाण्यशब्दाभिधेयत्व भी नहीं हो सकता; क्योंकि अनुगत धर्म का अभाव होने पर अप्रामाण्यशब्दाभिधेयत्व भी असम्भव है। शंका तदभाव वाले में तत्प्रकारकज्ञानत्व (उस धर्म के अभाव वाले पदार्थ में उसी धर्म से विशिष्टत्व समझना) अप्रामाण्य है। तब तो अप्रमाज्ञान में ज्ञानत्व का अनुगम होने से अप्रामाण्य का अनुगम भी होगा। अत एव परम्परासबन्धवाली जाति ही उपाधि कही जाती है। उत्तर ऐसा नहीं हो सकता; कारण कि ज्ञानत्व की प्रमा और अप्रमा दोनों में वृत्ति होने से अतिप्रसङ्ग होता है (अर्थात् प्रमा में भी ज्ञानत्व होने से अप्रामाण्य होने लगेगा)। लक्ष्यमात्रवृत्ति धर्म

त्वेन च अतिप्रसक्तत्वात् । तन्मात्रवृत्तिर्हि धर्मोऽनुगमको भवति ।

किञ्च–यदि ज्ञानत्वं परम्परासंबद्धमप्रमात्वम्, तद्वृत्तिवाऽनुगमकम्, तदा तथैव बोधापत्तिः स्यात् । न चैवं सम्भवत्यपि अन्यस्याऽनुगमेऽन्यस्याऽनुगम इति । तस्मान्मिथ्यार्थविषयत्वमेवाऽप्रमात्वम् । तथा च मिथ्याभूतार्थमेवेति स्वीकारः । अन्यथाऽप्रामाण्यस्य वक्तुमशक्यत्वात् ।

ननु– मिथ्यार्थविषयत्वमसिद्धम्; सत्यस्याऽधिष्ठानांशस्याऽपि तत्र स्फुरणात्, अन्यथा "रजतम्" इत्येव प्रतीत्यापत्तेः । न च– सत्यांशस्मरणमविरुद्धमिति– वाच्यम्; एकस्य प्रमात्वाऽप्रमात्वरूपविरुद्धधर्माऽध्यासेन भेदापत्तेरुक्तत्वात्;

ही अनुगमक होता है। किञ्च यदि परम्परासबद्ध ज्ञानत्व ही अप्रमात्व है, अथवा अप्रमावृत्ति अनुगमक ज्ञानत्व ही अप्रमात्व है, तो ज्ञानत्व से विशिष्ट होकर बोध होना चाहिये, (न कि अप्रमात्व से विशिष्ट होकर)। और यह सम्भव भी नही है कि अन्य (ज्ञानत्व) के अनुगम मे अन्य (अप्रमात्व) का अनुगम हो। इसलिये मिथ्यार्थविषयकत्व ही अप्रमात्व है। तब तो मिथ्याभूत पदार्थ है ऐसा स्वीकार करना होगा। अन्यथा अप्रामाण्य का निर्वचन असम्भव होगा।

शंका अप्रमाज्ञान का मिथ्यार्थविषयकत्व असिद्ध है, क्योकि सत्य अधिष्ठानांश भी भ्रम में स्फुरित होता है। यदि अधिष्ठान का स्फुरण नही माना जायेगा तो "रजत" इतने का ही स्फुरण होने लगेगा। उसमें सत्य अधिष्ठानांश का स्मरण होता है; अतः विरोध नहीं–ऐसा कहना भी उचित नही; कारण कि एक ज्ञान में प्रमात्व और अप्रमात्वरूप विरुद्ध धर्मद्वय का अध्यास होने से भेद की आपत्ति होगी। यदि उसमें विरोध नही मानोगे तो अन्यथाख्यातिवाद में भी

**अन्यथाऽन्यथाख्यातिवादेऽप्यविरोधात्। किञ्च– मिथ्यारजते सत्यरजतवृत्तिरजतत्वमस्ति न वा ? न प्रथमः; तस्य योग्यव्यक्तिवृत्तित्वनियमात्, भृङ्गत्ववत्; अन्यथाख्यातित्वापत्तेश्च। न द्वितीयः; अनुगतबुद्ध्यभावापत्तेः, रजतशब्दप्रयोगाऽनुपपत्तेश्च। रजतत्वं हि तत्र निमित्तम्। तत्र रजतत्वान्तरस्य प्रवृत्तिनिमित्तत्वेऽनेकार्थत्वापत्तिरिति चेत्– उच्यते; इदमिति इदंत्वेन शुक्तिमवगाहमानमन्तःकरणवृत्तिरूप ज्ञानं जायते, दोषप्रतिबन्धान्न शुक्तित्वमवगाहते; तदनु दोषवशाद्रजततद्गोचरज्ञानाऽऽकारेणाऽज्ञानं शुक्त्यवच्छिन्नचैतन्याऽऽवरणरूप विवर्तते– रजतमिति। उभयोश्च ज्ञानयोर्विवे-**

अविरोध होगा। किञ्च – मिथ्या रजत मे सत्यरजतवृत्ति रजतत्व है, या नही ? प्रथम पक्ष नही हो सकता; क्योकि भृङ्गत्व के समान उस रजतत्व की भी योग्यव्यक्ति मे ही वृत्ति होनी चाहिये। और ऐसा मानने पर अन्यथाख्याति का प्रसङ्ग भी आता है। द्वितीय पक्ष भी ठीक नही, कारण कि मिथ्यारजत मे रजतत्व की अनुगतबुद्धि नहीं होगी, और उस मे रजतशब्द का प्रयोग भी असम्भव होगा; क्योकि रजतशब्द की प्रवृत्ति मे रजतत्व निमित्त है। यदि उस मिथ्या रजत मे रजतशब्द की प्रवृत्ति का निमित्त रजतत्वान्तर मानोगे तो एक ही रजतशब्द की अनेकार्थत्वापत्ति होगी।

समाधान– इसका उत्तर यह है– "इद रजतम्" इस भ्रम मे 'इदम्' इस प्रकार से इदत्वरूप से शुक्ति को विषय करने वाला अन्त -करणवृत्तिरूप ज्ञान उत्पन्न होता है। वह ज्ञान दोष से प्रतिबन्ध होने के कारण शुक्तित्व का ग्रहण नही करता, और उसके बाद ही दोषवश रजत और रजतविषयकज्ञानरूप से शुक्त्यवच्छिन्न चैतन्य का आवरणरूप अज्ञान परिणाम को प्राप्त होता है, और उसी से 'रजत" इस प्रकार प्रतीति होती है। इस रीति से– इदमशविषयक ज्ञान और रजतविषयक ज्ञान दोनो मे भेदाग्रह (भेद के अज्ञान) से, अथवा एक-

काऽग्रहादेकत्वाऽभिमानः; एकफलाद्वा। न चैवं प्राभाकरमत-प्रवेशः, तेन मिथ्यारजतस्याऽनङ्गीकारात्; किञ्चित्साम्येन साम्याऽऽपादने सर्वस्य सर्वत्वापत्तिः। न च रजतशब्दप्रयोगा-ऽनुपपत्तिः, सविकल्परजताऽनुभवसंस्कारजन्यतया रजतभ्रम-स्य तद्वाचकशब्दोल्लेखोपपत्तेः। यद्वा--अस्त्येव तत्र रजतत्वम्, न च तस्य योग्यव्यक्तिवृत्तित्वनियमः, असिद्धेः; सत्तादि-वदुपपत्तेः। घटादिकमपि तथा स्यादिति चेत्; इष्टापत्तिः, नहि घटो भ्रमविषयः। व्यावहारिकरजतत्वाऽऽश्रयत्वे तदपि व्यावहारिकमेव स्यात्, न तु प्रातीतिकमिति--चेन्न; तत्र

फलत्व होने से एकत्व का अभिमान होता है। और इस प्रकार मानने पर (अर्थात् भेदाग्रह मानने पर) सर्वज्ञानयथार्थवादी प्राभाकर मीमांसकों के मत में प्रवेश होता है ऐसी शंका भी नहीं करनी चाहिये, क्योंकि प्राभाकरों ने मिथ्यारजत का अङ्गीकार नहीं किया है; कुछ सादृश्यमात्र से सर्वसाम्य का आपादन करोगे तो सब मतों में सर्वसाम्य की आपत्ति आ जायेगी। और रजतशब्द के प्रयोग की अनुपपत्ति भी नहीं होगी; कारण कि रजतभ्रम सविकल्पकरजतानुभव के संस्कार से जन्य होने से उसमें (रजतभ्रम में) रजतवाचक शब्द का उल्लेख हो सकता है। अथवा उस मिथ्या रजत में रजतत्व है ही; और उस रजतत्व के योग्यव्यक्तिवृत्तित्व का नियम भी नहीं हो सकता क्योंकि सत्तादि के समान वृत्तित्व सम्भव होने से उस नियम की असिद्धि होती है (जैसे नैयायिकों के मत में द्रव्य, गुण, कर्म में ही सत्ता रहती है, तो भी सत्ता के अयोग्य सामान्य विशेषादि में भी उसकी प्रतीति होती है, उसी प्रकार यहां भी मिथ्यारजत में रजतत्व हो सकता है)। शंका – तब तो घटादि भी रजतत्व का आश्रय होने लग जायेगा। उत्तर यदि वह भी रजतभ्रम का विषय हो तो इष्टापत्ति है, किन्तु घट रजतभ्रम का विषय नहीं है। शंका- भ्रमविषयीभूत मिथ्यारजत में यदि व्यावहारिकरजतत्व मानोगे तो वह भी व्यावहारिक ही हो जायेगा, प्रातिभासिक तो नहीं होगा।

**तत्संसर्गस्य प्रातीतिकत्वात्; व्यावहारिके च तस्य व्यावहारिकत्वादेव। न च-- तस्याऽपि समवायरूपत्वेनैकत्वात्कथमेवं व्यवस्था स्यादिति--वाच्यम्; असिद्धेः। नहि य एव गोत्वसंसर्गः, स एव रजतत्वससर्गः, तथासत्यतिप्रसङ्गापत्तेः। तथा च संसर्गभेदाद्व्यवस्थोपपत्तिः। न चाऽपसिद्धान्तः; "इदंतासंसर्गवद्रजतस्य शुक्तिकासत्त्वसंसर्गोऽयमवभासते, न रजतस्याऽपरं सत्त्वम्" (ब्र० सूत्रं नवव्याख्योपेतं, पृ०२०४) इति विवरणकृताऽभिधानात्। तथा च यथा सत्त्वमन्यदीयं तत्र भासते, तथा रजतत्वमपीति को विरोधः? सत्त्वमधिष्ठानेऽस्ति, न रजतत्वमिति--चेन्न; तस्याऽपि "सर्वा सर्वगता जातिः" इति न्यायेन सर्वत्र सम्भवेनाऽनिर्वचनीयव्य-**

उत्तर- नही, क्योकि मिथ्यारजत मे रजतत्व का ससर्ग प्रातीतिक है, और व्यावहारिक रजत मे वह ससर्ग व्यावहारिक है। शका - उस ससर्ग के भी समवायरूप होने के कारण एक ही होने से यह व्यववस्था किस प्रकार हो सकती है? उत्तर ऐसा न कहो; क्यो कि समवाय का एकत्व असिद्ध है, जो गोत्वसमवाय है, वही रजतत्वसमवाय नही हो सकता; कारण कि-ऐसा होने पर अतिप्रसङ्ग होगा (अर्थात्-रजतादि मे भी गोत्वसमवाय होने पर उसमे गोत्व की वृत्ति अवश्य होगी), अत ससर्गभेद से व्यवस्था हो सकती है। इसमे अपसिद्धान्त भी नही; कारण कि "जिस प्रकार मिथ्यारजत मे इदता का ससर्ग अवभासित होता है, उसी प्रकार उसमे शुक्ति के सत्त्व का ससर्ग भी अवभासित होता है, रजत का अन्य सत्त्व नही" ऐसा विवरणकृत् आचार्य ने अभिधान किया है। तब तो जिस प्रकार अन्य का सत्त्व शुक्तिरजत मे भासित होता है, उसी प्रकार रजतत्व भी भासित होता है -- ऐसा मानने पर क्या विरोध है? शका सत्त्व तो अधिष्ठान में है, किन्तु रजतत्व अधिष्ठान मे नही। (अतः उसका अध्यस्त में कैसे भान होगा?) उत्तर-- ऐसा नही, क्योकि "सत्र

क्त्यभिव्यक्तिसंभवात्। तथा चाऽनुगतव्यवहारशब्दप्रयोगाद्युपपत्तिः।

ननु– त्रिविधसत्त्ववादिमते कथमयं दृष्टान्तः? तथाहि– परमार्थसत्त्वं ब्रह्मणः, निरुपाधिकत्वात्, सर्वथा सर्वदा बाधाऽभावाच्च। अर्थक्रियासामर्थ्यं सत्त्वं मायोपाधिकमाकाशादेः, व्यवहारदशायां विसंवादाऽभावात्, प्रमात्रा सह बाध्यत्वाच्च। अविद्योपाधिकं सत्त्वं रजतादेः; व्यवहारे विसंवादात्, सति प्रमातरि बाध्यत्वाच्चेति– चेन्न; एतस्याऽभ्युपगमवादत्वात्, अधिष्ठानसत्त्वमेवाऽध्यस्ते भासते, नाऽन्यत्सत्त्वान्तरमित्येव मुख्यः सिद्धान्तः। अत एवोक्तं महद्भिः –

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।

जाति सर्वगत है" इस न्याय से रजतत्व भी सर्वत्र सभव होने से अनिर्वचनीय रजतव्यक्ति में उसकी अभिव्यक्ति सम्भव है। इसलिये अनुगत व्यवहार और रजतशब्दप्रयोगादि सब हो सकते है।

शंका त्रिविधसत्तावादी के मत मे यह दृष्टान्त कैसे संभव होगा? तथाहि - ब्रह्म का परमार्थसत्त्व है, क्योंकि ब्रह्म निरुपाधिक और सर्वथा सर्वदा बाधरहित है। आकाशादि का मायोपाधिक अर्थक्रियासामर्थ्यरूपसत्त्व है, क्योंकि व्यवहारदशा में उसके विसंवाद (निष्फलत्व) का अभाव है और प्रमाता के सहित उसका बाध होता है। तथा शुक्तिरजतादि का अविद्योपाधिक सत्त्व है, कारण कि व्यवहार में विसवाद है और प्रमाता के वर्तमानकाल में उस का बाध होता है।

समाधान ऐसा नहीं; क्योंकि त्रिविधसत्तावाद अभ्युपगमवाद है (अपनी प्रौढवादिता को सिद्ध करने के लिये अन्य के द्वारा कहे हुए वचन को मानकर उत्तर देने का नाम अभ्युपगमवाद कहा जाता है)। अधिष्ठान का सत्त्व ही अध्यस्त में भासमान होता है, अध्यस्त का कोई दूसरा सत्त्व नही– यह मुख्य सिद्धान्त है। अत एव महान आचार्यों ने कहा है- "अस्ति, भाति, प्रिय, रूप और नाम- ये पांच

**आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥" (सरस्वती रहस्योपनिषत् २३ तथा वाक्यसुधा २०) । तथा च सत्ताभानाऽऽनन्देभ्यो निष्कृष्यमाणं जगद् बाधितं तुच्छमनिर्वचनीयमित्यादिशब्दैः कथ्यते । अत एव "इदं सर्वं यदयमात्मा" (बृ०२।४।६) इत्यपि संगच्छते; सदादिरूपेण जगद्ब्रह्मणोरभेदात्; रूपान्तरं तु नाऽस्त्येवेति तेन सह न भेदः, नाऽप्यभेदः, नाऽपि भेदाऽभेद इति । तदेतद्बाधोत्तरं शक्यज्ञानम्; ततः पूर्वन्तु सदादिरूपेणैव जगत्प्रतीयते । तथा च शुक्तिरजतस्याऽऽकाशादेश्च जगतो न कश्चिद्विशेषः । यत्तु शुक्तिरजतादेर्मायामयत्वप्रतिपादन शास्त्रे, तत्परं प्रति दृष्टान्तार्थम् । व्यावहारिकप्रातीतिकभाषाऽऽपि च तत्कालिकबाधाऽबाधाभ्याम् ।**

अंश जगत् के है । उनमे प्रथम तीन अंश ब्रह्मरूप है, और उससे भिन्न अन्तिम दो अंश जगत् के है ।" इसलिये सत्ता, भान और आनन्द इन तीन अंशो से पृथक् किया हुआ जगत् बाधित, तुच्छ, अनिर्वचनीय इत्यादि शब्दो के द्वारा कहा जाता है । अत एव "यह दृश्यमान सब जगत् यह आत्मा ही है" इत्यादि श्रुति का भी समन्वय हो जाता है; क्योकि सत् चित् और आनन्दरूप से जगत् और ब्रह्म मे अभेद है, और रूपान्तर अर्थात् नाम और रूप तो है नही, कल्पितमात्र है । अत उन दोनो के साथ ब्रह्म का न भेद है, न अभेद है, न तो भेदाभेद है । यह जो इस प्रकार का ज्ञान है, वह जगद्बाधोत्तर काल मे हो सकता है, उसके पहले तो सदादिरूप से जगत् प्रतीत होता है । इसलिये शुक्तिरजतादि और आकाशादि जगत् मे कुछ भी अन्तर नही और जो शुक्तिरजतादि के मायामयत्व का शास्त्र मे प्रतिपादन है, वह तो दूसरो के प्रति दृष्टान्त देने के लिये है । तथा व्यावहारिक और प्रातीतिक की परिभाषा भी तत्कालिक बाध और अबाधरूप निमित्त को लेकर होती है ।

ननु– एवं मिथ्यारजतोत्पत्तिस्वीकारेऽधिष्ठानसाक्षात्कारानन्तरं–"पूर्वमिदं रजतमत्राऽऽसीदिदानीं न" इति पूर्वाऽपरस्थलाऽवधित्वेन प्रतीतिः स्यात्; नतु "नेदं रजतं, कालत्रयेऽप्यत्र नास्ति" इत्यत्यन्ताभावोल्लेखनी, भूतले ध्वस्तघटपटस्य तथैव प्रतीतेरिति– चेन्न; मायामयस्य कालत्रयेऽप्यत्यन्ताऽभावस्यैव विद्यमानत्वात्, अन्यथा ज्ञानेन तन्निवृत्यनुपपत्तेः। अत एव प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमित्यनिर्वचनीयलक्षणं संगच्छते। घटस्य तु तथा प्रतीतिर्युक्तैव। न च– असदेव तर्हि रजतं स्वीकृतं स्यादिति–वाच्यम्; अपरोक्षप्रतीतिगोचरत्वात्। अत–तन्न सत्, बाध्यत्वात्, नाऽप्य-

शंका— इस प्रकार से मिथ्यारजत की उत्पत्ति स्वीकार करोगे तो अधिष्ठान के साक्षात्कार होने के बाद "पहले यहां पर यह रजत था, अब नहीं है" इस प्रकार पूर्व और अपर स्थल की सीमारूप में प्रतीति होनी चाहिये; "यह रजत नहीं है, यहां तो तीनों कालों में रजत का अभाव है" इस प्रकार अत्यन्ताभाव का उल्लेख करने वाली प्रतीति तो होनी नहीं चाहिये; क्योंकि भूतल में नष्ट घट पट की वैसी ही प्रतीति अर्थात् भूतल में घट था, अब नष्ट हो गया है ऐसी प्रतीति होती है।

समाधान— ऐसा न कहो; क्योंकि मायामय पदार्थ का अत्यन्ताभाव कालत्रय में विद्यमान ही रहता है। यदि ऐसा नहीं मानोगे तो ज्ञान से उसकी निवृत्ति नहीं होगी। इसलिये - "अनिर्वचनीय पदार्थ स्वाश्रयत्वेन ज्ञात अधिकरण में त्रैकालिक निषेध का प्रतियोगी है" यह लक्षण समन्वित होता है। और बाध न होने के कारण ध्वंसस्थल में घट की उस प्रकार प्रतीति (घट था, अब नष्ट हो गया - ऐसी प्रतीति) तो ठीक ही है। शंका–तब तो रजत असत् ही मानना होगा। उत्तर ऐसा भी न कहो; क्योंकि शुक्तिरजत अपरोक्ष प्रतीति का विषय है (यदि वह शशविषाण जैसा असत् होगा तो अपरोक्ष प्रतीति का विषय भी नहीं होगा)। इसलिये वह सत् नहीं; क्योंकि वह बाध्य

**सत्, अपरोक्षप्रतीतिविषयत्वादित्यनिर्वचनीयमित्याख्यायते। यत्तु– "नेह रजतम्" इति निषेधो नाऽनिर्वचनीयस्य, तस्य तत्र कालत्रयेऽत्यन्ताभावाऽभावात्, किन्तु लौकिकप्रसिद्धरजतस्यैव, तस्य तत्र तथात्वादिति–तन्न; तस्य प्राप्त्यभावात्। न च-- रजताभासप्राप्त्यैव तत्प्राप्तिः, अन्यस्य प्राप्त्याऽन्यप्राप्त्यनुपपत्तेः, उपपत्तौ वाऽनिर्वचनीयरजतकल्पनाऽनुपपत्तेः। न ह्यत्र रजतद्वयमनुभवसिद्धम्।**

**किञ्च– "नेति नेति" ( बृ०२।३।६ )वाक्येन यदा सर्वप्रपञ्चनिषेधोऽविशेषेण बोध्यते, तदा कः प्रतीकारः ? नहि**

है (सत् पदार्थ तो तीनो कालो मे अबाध्य होता है) तथा असत भी नही; क्योंकि वह अपरोक्ष प्रतीति का विषय है। इस कारण वह सत और असत् से विलक्षण अनिर्वचनीय कहा जाता है। इसमे कोई ऐसा कहते है "यहा रजत नही" यह निषेध अनिर्वचनीय पदार्थ का नही, क्योंकि प्रतीतिकाल मे उसका सत्त्व होने से कालत्रय मे अत्यन्ताभाव नही हो सकता, किन्तु लोकव्यवहार मे प्रसिद्ध रजत का ही "यहा व्यावहारिक रजत नही" ऐसा त्रैकालिक निषेध है, कारण कि उसका भ्रमस्थल मे त्रैकालिक अत्यन्ताभाव है। परन्तु ऐसा कथन ठीक नही, क्योंकि व्यावहारिक रजत की यहा प्राप्ति ही नही (प्राप्त वस्तु का ही निषेध किया जाता है); और रजताभास की प्राप्ति से ही उसकी प्राप्ति होगी - ऐसी बात भी नही हो सकती; कारण कि अन्य की प्राप्ति से दूसरे की प्राप्ति नही हो सकती। यदि हो सकती है तो अनिर्वचनीय रजत की कल्पना नही होगी। यहा रजतद्वय का अनुभव भी तो नही होता।

किञ्च "नेति नेति" इस श्रुति वाक्य से जिस समय सर्व प्रपञ्च का निषेध अविशेषरूप से जाना जाता है, उस समय इसका क्या प्रतीकार होगा ? उसमें भी तो प्रपञ्चद्वय नही है। अथवा

**तत्राऽपि प्रपञ्चद्वयमस्ति । अस्तु वा त्रिविधमेव सत्त्वम्, तथापि नाऽनुपपत्तिः; अत्रापि व्यावहारिकरजतत्वभाने दोषाऽभावात् । अत एव "तदेवेदं रजतम्" इति संगच्छते । अन्यथा व्यक्तिभेदे प्रत्यभिज्ञा किंनिबन्धना स्यात् ? तस्माद् रजतत्वं मिथ्यारजतवृत्ति—इति साधने न कोऽपि दोषः । न च—अस्यैवाऽनुमानस्य मानत्वे कथमनिर्वचनीयत्वं रजतस्य ? मानगम्यत्वात्, अमानत्वे सिद्धं नः समीहितमिति—वाच्यम्; व्यावहारिकमानविषयत्वाऽभ्युपगमात्, तत्त्वावेदकमानविषयत्वन्तु नाऽभ्युपगम्यते, हेत्वाभासोद्धाराच्च पदार्थान्तरव्यवहारवदुपपन्नोऽस्य व्यवहार इति परमुखमुद्रणम् ।**

तुम्हारे आग्रह के अनुसार त्रिविध सत्त्व ही हो, तो भी उससे हमारी कोई अनुपपत्ति नहीं; क्योंकि इस में भी भ्रमस्थल में व्यावहारिक रजतत्व का भान मानने पर कोई दोष नहीं । अत एव "यह वही रजत है" यह कथन सगत होता है । यदि भ्रमस्थल में व्यावहारिक रजतत्व का भान न मान कर व्यक्तिभेद मान लिये जाये तो यह प्रत्यभिज्ञा ( स्मृत्यनुभवात्मकबुद्धि ) किनिमित्तक होगी ? इसलिये "रजतत्व मिथ्यारजतवृत्ति है, (उक्त प्रत्यभिज्ञा का विषय होने से)" इस प्रकार अनुमान से उस को सिद्ध करने में कोई दोष नहीं । शंका इस अनुमान को रजत के प्रति प्रमाण मानोगे तो उसकी अनिर्वचनीयता कैसे सिद्ध होगी ? क्योंकि वह मानगम्य हो गया; यदि वह प्रमाण से सिद्ध नहीं है तो हमारा इष्ट सिद्ध ही हुआ (अर्थात् अनिर्वचनीयख्याति सिद्ध नहीं होगी, किन्तु अन्यथाख्याति ही सिद्ध होगी) । उत्तर ऐसा न कहो; क्योंकि हम मिथ्यारजत को व्यावहारिक प्रमाण का विषय मानते हैं; तत्त्वावेदक प्रमाण का विषय तो नहीं मानते । और इस अनुमान में हेत्वाभास का उद्धार होने के कारण जिस प्रकार प्रमाण से सिद्ध पदार्थान्तर का व्यवहार होता है, उसी प्रकार रजत का भी व्यवहार उपपन्न है । इस प्रकार यही दूसरों का मुख बन्द करने का उपाय है ।

**वस्तुतस्तु– तद्रजतं साक्षिसिद्धम्, तदभावोऽपि साक्षिसिद्ध एव; तस्य च प्रमाणाऽप्रमाणोदासीनत्वान्न कोऽपि दोष। अत एव व्यावहारिकरजताऽभाव एव "नेदं रजतम्" इत्युल्लिख्यते, तस्येन्द्रिययोग्यत्वात्; न त्वनिर्वचनीयरजताभावः, तस्याऽयोग्यत्वात्। न च–पारमार्थिकस्याऽत्राऽप्रसक्ति दोषः; तस्य भ्रमाऽविषयत्वेऽपि अधिष्ठानसाक्षात्कारानन्तरं स्मृत्युपस्थितस्य निषेधोपपत्तेः। प्रतियोगिज्ञानाऽपेक्षत्वादभावबुद्धेः। तत्स्मारकं चाऽधिष्ठानज्ञानमेव; प्रतियोगिज्ञानमेवाऽभावबुद्धौ हेतुः, न तु यत्राऽभावबुद्धिः, तत्राऽधिकरणे प्रतियोग्यारोपोऽपि, प्रमाणाऽभावात्, दोषाऽभावेन प्रतियोग्यारोपाऽसंभवाच्च। न च– एवं सर्वत्रैव निषेधप्रतीतिः स्या-**

वास्तव मे तो वह रजत साक्षी से सिद्ध है, और उसका अभाव भी साक्षी से ही सिद्ध है। अत साक्षी के प्रमाण और अप्रमाण से उदासीन होने से कोई दोष नही है। इसलिये "नेदं रजतम्" इससे व्यावहारिक रजत के अभाव का ही उल्लेख होता है; क्योंकि वह इन्द्रिय का विषय होने योग्य है, अनिर्वचनीय रजत का अभाव तो उल्लिखित नहीं होता, कारण कि वह इन्द्रियो से प्रत्यक्ष होने योग्य नही। शंका यहा पारमार्थिक अर्थात् व्यावहारिक रजत का अभाव मानोगे तो अप्राप्त के प्रतिषेध का दोष होगा। उत्तर नही, क्यों कि वह भ्रम का विषय न होने पर भी अधिष्ठानसाक्षात्कार के अनन्तर स्मृति मे उपस्थित होने से निषेध का विषय हो सकता है; कारण कि अभावज्ञान के लिये प्रतियोगिज्ञान की अपेक्षा है, प्रतियोगिप्राप्ति की नही। और प्रतियोगी रजतादि का स्मारक तो अधिष्ठानज्ञान ही है, तथा प्रतियोगिज्ञान ही अभावबुद्धि में हेतु है, जिस अधिकरण में अभावबुद्धि होती है, उस में प्रतियोगी का आरोप तो हेतु नही, क्योकि उसमे कोई प्रमाण नही। और उस समय (अधिष्ठानसाक्षात्कारानन्तरकाल में) दोष का अभाव होने से प्रतियोगी का आरोप भी असम्भव है। शंका प्रतियोगी का आरोप

दिति–वाच्यम्; अधिकरणाऽसन्निकर्षादिना योग्याऽनुपलब्धेरभावात्; यत्त्वारोप्य निषिध्यत इति मतम्; तन्निष्प्रमाणत्वात्तुच्छमेव; प्रतियोगितद्व्याप्येतरयावदुपलम्भसमवधाने प्रतियोगिज्ञानस्यैवाऽभावोपलम्भकत्वात्, प्रतियोग्यारोपव्यतिरेकेण कार्यव्यतिरेकाऽभावाच्च। भ्रमस्थले तु विवाद एव; विवरणकारमते प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमनिर्वचनीयत्वमिति लक्षणम्। तदुक्तेनैव कथं संगच्छतामिति न वाच्यम्; प्रतिपन्नस्य रजतादेरुपाधिरधिष्ठानम्; तत्र यो निषेधः सविलासाऽविद्यानिवृत्तिः, तत्प्रतियोगित्वमिति– तदर्थत्वात्। न च– एवंविधकल्पनायां प्रमाणाऽभावः; "कालत्रयेऽपि

किये बिना निषेध हो सकता है तो सर्वत्र निषेध की प्रतीति होने लगेगी। उत्तर ऐसा नहीं; क्योंकि अधिकरण के साथ इन्द्रियसन्निकर्षादि न होने से प्रत्यक्षयोग्य अनुपलब्धि का अभाव है। (अतः सर्वत्र निषेध की प्रतीति नहीं होगी)। और "प्रतियोगी का आरोप करके निषेध किया जाता है" ऐसा जो मत है, वह प्रमाणरहित होने से तुच्छ है, क्योंकि प्रतियोगी और उसके व्याप्य पदार्थों से (जिनके रहने पर प्रतियोगी रहता है, ऐसे पदार्थों से) भिन्न सब उपलम्भकारणों का सन्निधान होने पर प्रतियोगिज्ञान ही अभाव का उपलम्भक होता है; और प्रतियोगी के आरोप के अभाव से निषेधरूप कार्य का अभाव नहीं होता (अर्थात् आरोप किये बिना निषेध हो सकता है)। शंका भ्रमस्थल में तो विवाद ही है; विवरणकार के मत में प्रतिपन्न उपाधि में निषेधप्रतियोगित्व ही अनिर्वचनीयत्व का लक्षण है; वह पूर्वोक्त के साथ कैसे संगत होगा? उत्तर ऐसा न कहो; क्योंकि– प्रतिपन्न अर्थात् ज्ञात रजतादि की जो उपाधि अर्थात् अधिष्ठान है, उसमें जो निषेध अर्थात् कार्यसहित अविद्या की निवृत्ति, उस निवृत्ति का प्रतियोगित्व अनिर्वचनीयत्व है यह उस लक्षणवाक्य का अर्थ है (अतः संगति हो जाती है)। शंका– इस

रजतमिह नास्ति, मिथ्यारजतं मया प्रतिपन्नम्" इत्यनुभवस्यैवाऽन्यथानुपपन्नस्य कल्पकस्य विद्यमानत्वात्। न च– "नेति नेति" (बृ०२।३।६) इत्यादिश्रुत्या जगन्निषेधे नाय प्रकारः सम्भवति, जगद्द्वयाऽभावादिति–वाच्यम्; सति प्रमातरि बाधे पूर्वं गतेरुक्तत्वात्। अयन्तु प्रमात्रा सह बाधः; अद्वैतात्ममात्रपरिशेषात्। आकाशादेः प्रपञ्चस्य ब्रह्मात्माऽज्ञानेनोत्पन्नत्वात्तस्य ब्रह्मप्रदर्शकवाक्येन निरासे तत्कार्यस्याऽपि सर्वात्मना निरास एव। रजतादेस्तु शुक्त्यवच्छिन्नब्रह्माऽज्ञानोत्पन्नत्वम्, तेन तद्बाधेऽप्यन्येषामवस्थानं सम्भवतीति विशेषः।

प्रकार के अर्थ की कल्पना करने मे कोई प्रमाण नही है। उत्तर–– ऐसा न कहो, क्योकि 'कालत्रय मे भी यहा रजत नही", "मिथ्या रजत मैने जाना' इस प्रकार का अन्यथा अनुपपन्न अनुभव ही कल्पना के कल्पकरूप मे विद्यमान है। शका "नेति नेति" इस श्रुति से जगत् के निषेध मे यह पूर्वोक्त प्रकार सम्भव नही, क्योकि दो जगत् है नही; ( जिससे एक को आरोपित मान कर उसका निषेध किया जाये, और दूसरा परमार्थरूप से रह जाये)। उत्तर ऐसा कहना उचित नही, क्योकि प्रमाता के रहते हुए बाध मे गति तो पहले ही कह चुके है। और यह जगत् का बाध तो प्रमाता के सहित है, कारण कि - इसमे अद्वैत आत्मा मात्र परिशेष रहता है। और आकाशादि प्रपञ्च तो ब्रह्मात्मा के अज्ञान से उत्पन्न है; अतः "तत्त्वमसि" आदि ब्रह्मबोधक वाक्य से उस अज्ञान का निरास हो जाने पर उसके कार्य का भी सर्वथा निरास हो जाता है। शुक्तिरजतादि तो शुक्त्यवछिन्न ब्रह्म के अज्ञान से उत्पन्न होते हैं, इसलिये अधिष्ठान के ज्ञान से उन रजतादि का बाध होने पर भी अन्य व्यावहारिक रजतादि का अवस्थान सम्भव है - यह दोनो मे (जगद्बाध और शुक्तिरजतादिबाध में) अन्तर है।

ननु—एवं रजतस्य साक्षिमात्रवेद्यत्वे कथं तत्र रजतत्वं व्यावहारिकत्वञ्च भासेते ? तज्ज्ञाने तस्याऽन्तःकरणवृत्त्यपेक्षणादितिचेन्न; सुखत्वादिभानवदुपपत्तेः। अथ—अन्तःकरणवृत्तितद्धर्मादौ नाऽपेक्षा, अन्यत्र तु भविष्यतीति—चेन्न; "रजतमहं जानामि" इत्यनुभवबलेनाऽविद्यावृत्त्युपग्रहेणाऽपि रजतत्वे साक्षिप्रवृत्तौ दोषाऽभावात्; फलबलेन तथा कल्पनात्। तस्मात् सर्वथा मिथ्यारजतभाने न कोऽपि दोष इति सिद्धम्। मिथ्यात्वञ्च सत्त्वेनाऽसत्त्वेन सदसत्त्वेन विचाराऽसहत्वम्; प्रतिपन्नोपाधौ निषेधप्रतियोगित्वम्, अविद्यातत्कार्याऽन्यतरत्वमित्यादिकमूह्यम्। भ्रमबाधव्यवस्थोपपत्तिरद्वैतसिद्धौ

शंका—इस प्रकार से रजत को साक्षिमात्रवेद्य मानेंगे तो उसमें रजतत्व और व्यावहारिकत्व कैसे प्रतीत होंगे ? कारण कि उन दोनों के ज्ञान करने में साक्षी को अंतःकरणवृत्ति की अपेक्षा रहती है। समाधान—नहीं; अन्तःकरणवृत्ति के बिना जिस प्रकार सुखत्वादि का ज्ञान साक्षी को होता है, उसी प्रकार दोनों का ज्ञान भी हो सकता है। शंका—अन्तःकरणवृत्ति और उस के धर्मादि के ज्ञान में अपेक्षा न होने पर भी अन्य के ज्ञान में तो अन्तःकरणवृत्ति की अपेक्षा होगी। समाधान—नहीं; "मैं रजत को जानता हूँ" इस अनुभव के बल से रजताकार अविद्यावृत्ति माननी होगी, उस अविद्यावृत्ति के सम्बन्ध से रजतत्व में साक्षी की प्रवृत्ति होने में दोष नहीं, क्योंकि फलबल से वैसी ही कल्पना की जाती है (कारण कि रजतत्व के विना रजत का भान नहीं हो सकता, किन्तु रजत साक्षिभास्य होता है; अतः रजतत्व भी साक्षिभास्य है)। इसलिये मिथ्या रजत के भान में सर्वथा कुछ भी दोष नहीं-यह सिद्ध हुआ। और मिथ्यात्व तो सत् रूप से, असत् रूप से और सदसद्रूप से विचारासह्य है; तथा प्रतिपन्न उपाधि में निषेधप्रतियोगित्व, एवं अविद्या और उसके कार्य का अन्यतरत्व आदि समझना चाहिये। भ्रमबाधव्यवस्था की उपपत्ति तो अद्वैतसिद्धि में विस्तार से कही गई है; अतः वहां देख

**सविस्तरमनुसन्धेयेतीहोपरम्यते। तत्सिद्धमेतद्भेदपारमार्थिकत्वाऽनुमानं शुक्तिरजतादौ व्यभिचारि।**

**तथा—भेदः प्रमाविषयः, ज्ञानविषयत्वाद्, ब्रह्मवदित्यपि दुष्टम्; अप्रयोजकत्वात्, उक्तप्रकारेण दृष्टान्ताऽसिद्धेश्च, अभेदश्रुतिबाधितत्वाच्च। किञ्च—प्रमात्वं यदि व्यवहारोपयिकार्थविषयत्वम्, तदा सिद्धसाधनम्; अथ— यथार्थविषयाऽनुभवत्वम्; तत्र यदि यथाशब्दस्य सादृश्यमर्थः, तदानीं यथाकथञ्चिदर्थसादृश्य भ्रमेऽप्यस्ति; तद्विषयत्वेन सिद्धसाधनम्। असाधारण्येन रूपेण सादृश्यस्याऽसम्भव एव। अथ—तत्वाऽनुभवत्वम्; तदापि भ्रमस्याऽपि रजतत्वादिस्वविषय-**

होनी चाहिये। इसलिये यहाँ विचार नहीं किया गया (अद्वैतसिद्धि के ख्यातिबाधान्यथानुपपत्त्यादि प्रकरण में इसका विचार हुआ है)। अतः यह सिद्ध हुआ कि भेदपारमार्थिकत्व का अनुमान शुक्तिरजतादि से व्यभिचारी है।

इसी प्रकार भेद प्रमा का विषय है, क्योंकि वह ज्ञान का विषय है जैसे ब्रह्म ज्ञान का विषय होने से प्रमा का विषय होता है यह अनुमान भी दुष्ट ही है। कारण कि इसमें भी हेतु अप्रयोजक है और प्रथम अनुमान खण्डन में कथित रीति से दृष्टान्त की असिद्धि भी है, तथा अभेदज्ञापकश्रुति से बाधित है। किञ्च प्रमात्व का अर्थ व्यवहारयोग्यपदार्थविषयकत्व है, तो सिद्धसाधन है और यदि यथार्थविषय का अनुभवरूप है और उस में भी यदि यथाशब्द का अर्थ सादृश्य है तो यथाकञ्चित् अर्थसादृश्य भ्रम में भी है, अतः भेद में भ्रमविषयत्व होने से सिद्धसाधन है। और असामान्यरूप से सादृश्य होना तो असम्भव ही है। यदि प्रमात्व का अभिप्राय तत्त्वानुभवत्व है, तो भी भ्रम का भी रजतत्वादि में स्वविषयत्व (भ्रमविषयत्व) होने के कारण उसी से अर्थान्तर (प्रकृत में अनुपयुक्त)

त्वात्तेनैवाऽर्थान्तरम् । अथ–यत्र यदस्ति, तत्र तत्तत्त्वम्, तद-नुभवत्वमेव तत्र प्रमात्वम्, तथा च न शुक्तौ रजतत्वमस्तीति न तदनुभवः प्रमा, तथा च न स्वविषयत्वेनाऽर्थान्तरमिति–चेन्न; विकल्पाऽसहत्वात् । तथाहि–अस्तीति यदि वर्तमानता विवक्षिता, तदा पाकरक्ते घटे "श्यामोऽयम्" इति बुद्धिः प्रमा न स्यात्; तदानीं श्यामत्वस्य वर्तमानत्वाऽभावात् । अथ–यदाकदाचित् सत्त्वमात्रं विवक्षितम्, तदा "इदानीं श्यामः" इत्यस्याऽपि प्रमात्वापत्तिः । पूर्वं घटसत्वे इदानीञ्चाऽसत्वे "इदानीं घटवत्" इत्यस्याऽपि ज्ञानस्य प्रमात्वापत्तिश्च ।

किञ्च–किमिदमस्तित्वं वृत्तिमात्रं वा, सत्तायोगित्वं वा,

हो जायेगा। शका जिस में जो है, उसमें वही तत्त्व है, उस तत्त्व का अनुभव ही उसमें प्रमा है (अर्थात् - शुक्ति में शुक्तित्व है, वहाँ शुक्तित्व शुक्ति में तत्त्व है; और उस शुक्तित्व का शुक्ति मे अनुभव होना ही उस अनुभव का प्रमात्व है--- यह तत्त्वानुभवत्व की व्याख्या है)। तब तो शुक्ति मे रजतत्व न होने के कारण उसमें रजतत्व का अनुभव प्रमा नहीं; इसलिये रजतत्वादि में भ्रम की स्वविषयता के द्वारा अर्थान्तर नहीं होगा। समाधान – यह नही हो सकता; क्योंकि तुम इन विकल्पों का उत्तर नही दे सकते। तथाहि - "यत्र यदस्ति" इसमें "अस्ति" शब्द से वर्तमान काल में अस्तित्व विवक्षित है, तो पाक से रक्त घट में "यह श्याम था" यह बुद्धि प्रमा नहीं होगी, कारण कि- उस समय (रक्तताकाल में) उसमें श्यामत्व वर्तमान नहीं। यदि "अस्ति" शब्द का अर्थ यदा कदाचित् सत्त्वमात्र विवक्षित है, तो उस रक्त घट मे "इस समय श्याम है" इस बुद्धि का भी प्रमात्व होने लगेगा। इसी प्रकार- पूर्वकाल में भूतल मे घट का सत्त्व था, और इस समय नही है, तो भी "इस समय भूतल घटवत् है" इस ज्ञान का प्रमात्व होने की आपत्ति होगी।

किञ्च यह "अस्तित्व" क्या (१) वृत्तिमात्र (सबन्धमात्र)

**स्वरूपसत्त्वं वा, प्रामाणिकत्वं वा ? नाऽऽद्यः; संयोगसमवाय-स्वरूपसबन्धसाधारणस्य संबन्धत्वस्य मात्रशब्दार्थस्य वक्तु-मशक्यत्वात् । अविशिष्टधीव्यावृत्तविशिष्टधीनियामकत्वं तदिति-चेन्न; यस्य यत्र यः संबन्धः, स एव वैशिष्ट्यं तत्रेति विशिष्टशब्दनिर्वचने आत्माश्रयापत्तेः, धीशब्देन च ज्ञान-मात्रविवक्षायां "लोहितः स्फटिकः" इत्यादौ व्यभिचारः; प्रमाविवक्षायामाऽऽत्माश्रयः । अथ– अखण्डोपाधिः संबन्धत्व-मिति– चेन्न, तत्स्वीकारे जात्यपलापापत्तेः, तेनैव व्यवहारस्य चरितार्थयितुं शक्यत्वात् । अथ-- संबन्धशब्दो नैकार्थोऽक्षा-**

है ? (२) या सत्तायोगित्व है ? (३) या स्वरूपसत्त्व है ? (४) अथवा प्रामाणिकत्व है ? इनमें (१) आद्यपक्ष नहीं हो सकता; कारण कि - संयोग, समवाय, स्वरूपसबन्धों में साधारण मात्रशब्दार्थ-भूत सबन्धत्व कहना असम्भव है। शका– अविशिष्ट धी (विशेषण-विशेष्यभावाऽविषयक बुद्धि) से व्यावृत्त विशिष्टबुद्धि का नियामकत्व सबन्धत्व है। तब तो यह सबन्धत्व सयोगादि तीनों में अनुगत होगा। समाधान- नहीं; क्योंकि जिसका जिसमें जो सबन्ध है, वही सम्बन्ध उसमें वैशिष्ट्य है इस प्रकार विशिष्ट शब्द के निर्वचन में आत्माश्रय हो जायेगा ("विशिष्टबुद्धिनियामकत्व सबन्धत्वम् इस में विशिष्ट शब्द का अर्थ सम्बन्धघटित होने से सम्बन्धप्रतिपादन में सम्बन्ध का सहारा लेना पड़ा, अत आत्माश्रय होता है)। और धीशब्द से ज्ञानमात्र की विवक्षा है, तो "लोहित स्फटिक है" इत्यादि विशिष्टधी होने के कारण उसमें प्रमालक्षण का व्यभिचार होता है, और प्रमा की विवक्षा होने पर आत्माश्रय है (प्रमा के लक्षण में प्रमासन्निवेश होने से आत्माश्रय है)। शका– सम्बन्धत्व अखण्डो-पाधि है (निर्वचन के अयोग्य सामान्य को अखण्डोपाधि कहते है)। समाधान– नहीं; क्योंकि अखण्डोपाधि को मानोगे तो जातिमात्र का अपलाप हो जायेगा, कारण कि- उसी से गोत्वादि का व्यवहार

दिशब्दवत्, तथा च क्वचित्संयोगः, क्वचित्समवायः, क्वचित्स्वरूपसंबन्ध इति यथासम्भवं वृत्तिपदेन ग्राह्यम्; तथा च न कोऽपि दोष इति —चेन्न; तथासति सकृदुच्चारितावेकस्यैवाऽर्थस्य प्रतीत्यापत्तावव्यापकतापत्तेः। सम्भवात् त्रयमपि लक्षणवाक्ये ग्राह्यमिति— चेन्न; तथाव्युत्पत्तिविरहादक्षादौ तथाऽदर्शनात्। तत्र तात्पर्याऽभावः, अत्र तु न तथेति चेन्न; व्युत्पत्त्यनुसारेणैव तात्पर्यकल्पनात्, अन्यथाऽतिप्रसङ्गात्। कथं तर्हि "गङ्गायां घोषमत्स्यौ वसतः", "सैन्धवमानय" इत्यत्र युगपदनेकत्र तात्पर्ये युगपदनेकार्थाऽवबोधः? शब्दाऽवृ-

चरितार्थ किया जा सकता है। शंका—सम्बन्धशब्द अक्षादिशब्द के समान अनेकार्थक है, अतः कहीं संयोग, कहीं समवाय, और कहीं स्वरूपसम्बन्ध— इस प्रकार यथासम्भव वृत्तिशब्द से ग्राह्य है; तब तो कोई दोष नहीं। समाधान—नहीं, ऐसा होने पर एक बार उच्चारित वृत्तिशब्द से एक ही अर्थ की प्रतीति हो जायेगी; तब तो तीनों सम्बन्धों की प्रतीति न होने से लक्षण में अव्याप्तिदोष होगा। शंका—सम्भव होने से तीनों ही लक्षणवाक्य में ग्राह्य है। उत्तर—नहीं; इस प्रकार अर्थबोधन कराने की शक्ति शब्द में नहीं और अक्षादि शब्द में भी वैसा देखने में नहीं आता। इस पर शंका हो कि अक्षादिशब्द में तात्पर्य का अभाव है, और यहां वृत्तिशब्द में तो तात्पर्य का अभाव नहीं (अर्थात्— तीनों सम्बन्धों के ग्रहण कराने में तात्पर्य है), तो ऐसा कथन ठीक नहीं, क्योंकि शब्दशक्ति के अनुसार ही तात्पर्य की कल्पना की जाती है, अन्यथा अतिप्रसङ्ग होगा। शंका—तब तो "गङ्गा में घोष और मत्स्य है", "सैन्धव लाओ" इत्यादि में युगपत् अनेक में तात्पर्य होने पर युगपत् अनेकार्थ का बोध क्यों होता है? (भाव यह है कि प्रथम वाक्य में घोष यानी गोपालक की झोपड़ी के साथ अन्वय करते समय गङ्गापद का अर्थ तीर होता है और मत्स्य के साथ अन्वय में जलप्रवाह अर्थ होता है; और दूसरे वाक्य में सैन्धव का अर्थ नमक और घोड़ा दोनों

त्येति गृहाण । अन्यथा शब्दस्वभावभङ्गप्रसङ्गात् । न च-अत्राऽप्यवृत्त्या लक्षणवाक्येऽनेकार्थप्रतीतिरिति- साम्प्रतम्; वादिवाक्ये आकृतिलक्षणयोरभावात्; अन्यथा कथाया अपर्यवसानप्रसङ्गात् ।

किञ्च-नित्यप्राप्तित्वं हि समवायत्व भवन्मते; तथा च प्राप्तित्वं संबन्धत्वमेव, तच्च त्रितयसाधारण दुर्वचमेव, तत्त्यागे नित्यत्वमात्रमतिप्रसक्तम् । नित्यत्वमपि ध्वसाऽप्रतियोगित्वं प्रतियोगित्वज्ञानाऽधीनज्ञानम्, तच्च स्वभावविशेषः, स च सबन्धान्तरमन्तरेण विशिष्टप्रत्ययजननयोग्यत्वरूपः । योग्यता च बाधकप्रमाविरहः । तत्र सबन्धान्तरशब्देन च

होते हैं । सिद्धान्ती के कथनानुसार तो ऐसा अर्थ होना नहीं चाहिये । अन्त एक शब्द के युगपत् अनेकार्थ प्रर्न न हो सकते हैं) । उत्तर ऐसे स्थलों में शब्द की वृत्ति (अभिधावृत्ति और लक्षणावृत्ति) के बिना ही अनेकार्थ की प्रतीति समझो अन्यथा शब्दस्वभावभङ्ग का प्रसङ्ग होगा । शङ्का तब तो इस लक्षणवाक्य में भी वृत्ति के बिना अनेकार्थ की प्रतीति है । उत्तर ऐसा कहना उचित नहीं; क्योंकि वादी के वाक्य में आकृति (सकेत) और लक्षणा का अभाव होता है, अन्यथा कथा का अपर्यवसानप्रसङ्ग होगा (कारण कि-कहे और कुछ, और उसका अभिप्राय और कुछ निकाले तो कथा का निर्णय असम्भव होता है) ।

किञ्च आपके मत में नित्यप्राप्ति ही समवाय है, और प्राप्ति तो सम्बन्ध ही है, इस प्रकार प्राप्तित्वरूप उस सम्बन्धत्व का संयोगादि तीनों सम्बन्धों में साधारण होकर निर्वचन करना असम्भव है । उसको त्याग कर नित्यत्वमात्र को समवाय मानोगे तो अतिप्रसक्ति होगी । और नित्यत्व भी ध्वस का अप्रतियोगित्व है, तथा वह अप्रतियोगित्व भी प्रतियोगित्वज्ञान के अधीन होने वाले ज्ञान का विषय है, इसी प्रकार वह ध्वसाप्रतियोगित्व भी स्वभाव (स्वरूप) विशेष है, और वह भी सम्बन्धान्तर के बिना विशिष्ट-

**संयोगसमवाययोर्विवक्षणेन चाऽऽत्माश्रयादिकं योज्यम् । एवं स्वरूपसंबन्धनिर्वचनेऽपि दोषो देयः; अभावाऽधिकरणादावेकधर्माऽभावेन विशिष्टप्रत्ययजननयोग्यत्वस्याऽपरिच्छेद्यत्वात् । विशिष्टशब्दस्य संबन्धघटितत्वेन; प्रत्ययशब्दस्य च प्रमापरत्वेनाऽऽत्माश्रयादि; ज्ञानमात्रपरत्वे तु भ्रमरूपतादृशप्रत्ययजनके संबन्धत्वापत्तिः । तस्माद् वृत्तिमात्रमस्तित्वमित्यलक्षणम् । नापि (२) सत्तायोगित्वमिति द्वितीयः; घट-**

प्रत्ययजननयोग्यतारूप है, और योग्यता तो बाधकप्रमा का विरह है। उसमें सम्बन्धान्तरशब्द से संयोग और समवाय की विवक्षा होने के कारण समवाय के लक्षण में आत्माश्रयादि दोष समझना चाहिये। इसी प्रकार स्वरूपसम्बन्ध के लक्षण में भी दोष देना चाहिये। (सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजननयोग्यत्वम्- इस स्वरूपसम्बन्ध के लक्षण में दोष यह है कि)-- अभावाधिकरणादि में अनुगत योग्यतावच्छेदक किसी एक धर्मके अभाव से विशिष्टप्रत्ययजननयोग्यत्व अपरिच्छेद्य हो जाता है (यह नियम है कि जिनमें किसी एक कार्य को करने की योग्यता होती है, उनमें उस योग्यता का व्यावर्तक अनुगत एक धर्म चाहिये; अन्यथा किसी कार्य को करने में सब ही योग्य हो जायेंगे। "घटाभाववद् भूतलम्" इत्यादि में घटाभावादि अपने अधिकरण भूतलादि में स्वरूपसम्बन्ध से रहता है। अतः अभावाधिकरणादि में स्वरूपसम्बन्ध के विशिष्टप्रत्ययजननयोग्यत्व का व्यावर्तक और सब में अनुगत एक धर्म होना चाहिये, जिससे योग्यत्व अन्यों से व्यावर्त्य अर्थात् परिच्छेद्य जाना जाये। और उस योग्यतावच्छेदक धर्म का अभाव होने पर तो योग्यत्व अपरिच्छेद्य हो जाता है)। और विशिष्टशब्द सम्बन्धघटित तथा प्रत्ययशब्द प्रमार्थक होने से स्वरूपसम्बन्ध और प्रमा के लक्षण में आत्माश्रयादि दोष होंगे। और प्रत्ययशब्द ज्ञानमात्रपरक मानने पर तो भ्रमरूप विशिष्टप्रत्यय के जनक में सम्बन्धत्व की आपत्ति आयेगी। इसलिये वृत्तिमात्र ही अस्तित्व है यह लक्षण नहीं हो सकता। और (२) सत्तायोगित्व

**त्वस्य घटे सत्तायोगित्वाऽभावात्; तज्ज्ञानाऽव्याप्तेः, सर्वथा त्वभावे तदभावादभावविशिष्टप्रमायामव्याप्तिः । नाऽपि (३) तृतीयस्वरूपम्, सत्त्वस्य तत्स्वरूपत्वेन लक्षणाऽनुपपत्तेः । न च– लक्ष्यमप्यननुगतमिति नाऽयं दोष इति– वाच्यम्; तत्तत्स्वरूपस्य स्वशब्देन वक्तुमशक्यत्वात् । नाऽपि (४) चतुर्थः, आत्माश्रयापत्तेः । किञ्च–"लोहितः स्फटिकः" इत्यादौ लौहित्यं स्फटिकेऽस्तीति तदनुभवात्तत्र प्रमा स्यात् । नास्ति तत्त्रेति यदि ब्रूयात्; स प्रतिवक्तव्यः–शौक्ल्यं स्फटिकत्वं वा तत्र कथमस्तीति? प्रतीयमानत्वादिति यदि, तत्कि लौहित्य-**

अस्तित्व है यह द्वितीय पक्ष भी नही हो सकता; क्योकि "घटे घटत्वमस्ति" इसमे घटत्व का घट मे सत्तायोगित्वरूप अस्तित्व नही है; अत. उसके ज्ञान मे प्रमालक्षण की अव्याप्ति होगी । और अभाव मे सर्वथा सत्तायोगित्व का अभाव होने से अभावविशिष्टप्रमाज्ञान मे भी अव्याप्ति होगी । तृतीय पक्ष (३) स्वरूपसत्त्वरूप अस्तित्व भी नही हो सकता, क्योकि सत्त्व ही स्वरूप होने से लक्षण बन नही सकता (अर्थात्– स्वरूप भिन्न भिन्न होने के कारण सब मे अनुगत लक्षण नही हो सकता) । शका लक्ष्य भी अननुगत होने से यह दोष नही होगा । समाधान ऐसा न कहो; क्योकि पदार्थो के तत्तत्स्वरूप को स्वशब्द से कहना असम्भव है । और (४) प्रामाणिकत्वरूप चतुर्थपक्ष भी नही हो सकता; कारण कि आत्माश्रय हो जायेगा (प्रामाणिकत्व का अर्थ है प्रमाविषयत्व; तब तो प्रमा के लक्षण मे ही प्रमाघटित होने मे आत्माश्रय है) । किञ्च–"लोहित स्फटिक" इत्यादि मे स्फटिक मे लौहित्य के अस्तित्व का अनुभव होने से उस मे (लौहित्य मे) प्रमाज्ञान होना चाहिये। इसमे यदि तुम कहो कि– स्फटिक मे लौहित्य नही है, तो तुम को इस प्रश्न का उत्तर देना होगा कि शुक्लत्व अथवा स्फटिकत्व क्यो स्फटिक मे है ? प्रतीयमान होने से उनका अस्तित्व स्फटिक मे है– यह यदि उत्तर

संबन्धस्तत्र न प्रतीयते ? भ्रान्तिः सेति चेन्न; प्रमात्वाऽनिरुक्तौ सा भ्रान्तिः, इयं प्रमेत्यस्यैवाऽसिद्धेः । बाधात्तत्र तस्य संबन्धाऽभावो निश्चीयत इति चेत्; तर्हि यत्र यस्याऽबाधितः संबन्धः, तत्र तस्याऽनुभवः प्रमेति लक्षणार्थः; बाधस्य विपरीतप्रमारूपत्वात् । किञ्च-- स्वस्य बाधाऽभावो वा तत्र, सर्वस्य वा? नाऽऽद्यः; "नीलं तमः" इत्यादौ स्वस्य तत्काले बाधाऽभावेन तत्र नीलादिसंबन्धस्वीकाराऽऽपत्तेः । न द्वितीयः; कालान्तरे देशान्तरे सर्वेषां स्वस्य बाधाऽभावस्याऽसर्वज्ञेन ज्ञातुमशक्यत्वात् ।

है तो हम तुमसे पूछते हैं कि-- क्या स्फटिक में लौहित्य प्रतीत नहीं होता ? उसकी प्रतीति तो होती है, किन्तु वह भ्रान्ति है यह उत्तर तो ठीक नहीं; क्योंकि अभी तक प्रमात्व का निर्वचन न हो सकने से "वह भ्रान्ति है", और "यह प्रमा है" ऐसा कहना ही असिद्ध है। शंका-- बाध होने से स्फटिक में लौहित्य का सम्बन्धाभाव निश्चित किया जाता है । उत्तर-- तब तो जिसमें जिसका अबाधित सम्बन्ध है, उसमें उसका अनुभव प्रमा है यह लक्षण का अर्थ हुआ, क्योंकि बाध विपरीतप्रमारूप है। किञ्च-- उसमें अपना ही बाधाभाव है, अथवा सब लोगों का ? आद्य नहीं होगा; क्योंकि "नील तम" इत्यादि में अपना उस समय बाधाभाव होने से तम में नीलादि का सम्बन्ध स्वीकार करना होगा (नैयायिकों के मत में तम तेज का अभावरूप है, अतः उनके मत में तेजोऽभावरूप तम में नीलगुण असम्भव होने से "नील तमः" यह प्रतीति भ्रान्ति ही है; तो भी जिस समय प्रतीति होती है, उस समय तो कभी भी बाध नहीं होता; अतः उस समय तम में नील का सम्बन्ध अवश्य मानना ही होगा। और सिद्धान्ती के मत में तो तम भावपदार्थ है) । द्वितीय पक्ष भी ठीक नहीं; क्योंकि कालान्तर और देशान्तर में सब लोगों का तथा अपना बाधाभाव असर्वज्ञ को ज्ञात नहीं हो सकता ।

किञ्च- आनुभविको बाधो यौक्तिको वा ? नाऽऽद्यः; "नीलं तमः" इत्यादौ तदा तदभावात् । न द्वितीयः; प्रकृतेऽपि तत्सम्भवात् । रजतत्वादेस्तद्वति तदभाववति वा वृत्तावात्माश्रयाऽतिप्रसङ्गौ । तदुपलक्षितवृत्तौ च व्यक्तिमात्रं वोपलक्ष्यं, व्यक्तिविशेषो वा ? प्रथमेऽतिव्याप्तिः, द्वितीयेऽननुगमः । सास्नादिमत्त्वादिना तदुपलक्षितं यदि, तत्राऽपि विशेषणोपलक्षणपक्षोक्तदोषः संचारणीयः । एवं सर्वत्र वृत्तिमति पदार्थे दोषो देयः ।

ननु-कुत्राऽस्ति-इति प्रश्ने यत्र प्रतीयत इत्येवोत्तरम्; कुत्र प्रतीयत इति प्रश्ने यत्राऽस्तीत्येवोत्तरमिति- चेन्न;

किञ्च क्या बाध अनुभव से सिद्ध है, अथवा युक्ति से ? आद्यपक्ष नहीं होगा क्योंकि 'नील तम' इत्यादि में उस समय आनुभविक बाध नहीं होता। द्वितीयपक्ष भी नहीं हो सकता; कारण कि प्रकृतभेद में भी यौक्तिक बाध सम्भव है। इसी प्रकार रजतत्वादि की वृत्ति रजतत्ववाले अथवा रजतत्वाभाव वाले पदार्थ में मानने पर क्रम से आत्माश्रय और अतिप्रसङ्ग दोष होते हैं। और यदि रजतत्व से उपलक्षित में उस की वृत्ति है, तो क्या व्यक्तिमात्र उपलक्ष्य है, या व्यक्तिविशेष ? प्रथमपक्ष में अतिव्याप्ति और द्वितीय में अननुगम दोष है। यदि सास्नादिमत्त्वादि से वह व्यक्ति उपलक्षित है तो उसमें भी विशेषण और उपलक्षणपक्ष में दिये गये दोषों का सञ्चार करना चाहिये (भेदस्वरूपत्वनिरासप्रकरण में इस का विवरण दे चुके हैं)। इस प्रकार सब वृत्तिमान् पदार्थों में दोष देना चाहिये (संयोग या समवाय सम्बन्ध से किसी में आश्रित होकर रहने वाले पदार्थ को वृत्तिमान् कहा जाता है)।

शंका "कहां है ? इस प्रश्न का "जहां प्रतीत होता है" यह उत्तर है, और "कहां प्रतीत होता है ? इस प्रश्न का "जहां है" यही उत्तर है। उत्तर ऐसा नहीं होगा, क्योंकि 'जहां है' इस उत्तर

यत्रास्तीत्यत्रैव तद्वति तदभाववति प्रश्नस्य विद्यमानत्वात्। यत्रेति ह्याधारः कथ्यते। स एव च विचार्यते। प्रतीतिस्तावदस्तीति- चेन्न; वस्तोत्तरत्वात्। नाऽपि यत्र यदस्ति, तत्र तस्याऽनुभवः प्रमा; रजते रजतत्वानुभवोऽस्तीति भ्रमेऽतिव्याप्तेः। नाऽपि यत्र विशेष्ये यदस्ति, तत्र विशेष्ये तत्प्रकारकत्वम्; रजतत्वस्याऽपि क्वचित् ज्ञानविशेष्यत्वात्। यत्र ज्ञाने यद्विशेष्यम्, तत्र वर्तते यो धर्मः, तत्प्रकारकाऽनुभवः, तत्प्रमा- इति चेन्न; विकल्पाऽसहत्वात्। तथाहि- किं वस्तुगत्या यस्मिन् ज्ञाने यद्विशेष्यम्, तत्र यो धर्म इति वा,

में पुनः "तद्वान् में है" या "तदभाववान् में है?" यह प्रश्न किया जा सकता है (अर्थात् जहां घटत्व है वहां घटत्व प्रतीत होता है इस उत्तर में यह प्रश्न हो सकता है कि क्या घटत्व घटत्ववान् है? या घटत्वाभाववान् में है) ? और "जहां (यत्र) इस शब्द से आधार ही कहा जाता है इस आधार का ही तो यहां विचार हो रहा है जो अभी तक सिद्ध हुआ नहीं। यदि तुम कहो कि उसकी प्रतीति होती है, तो इसका उत्तर दे चुके हैं (अर्थात् किसी वस्तु की प्रतीति मात्र से सिद्धि नहीं होती)। और 'जिसमें जो है उसमें उसका अनुभव प्रमा है' यह भी नहीं हो सकता, क्योंकि 'रजत में रजतत्व का अनुभव है' अर्थात् प्रातिभासिक रजत में रजतत्व के भ्रम में अतिव्याप्ति होती है। तथा 'जिस विशेष्य में जो है, उस विशेष्य में उसका विशेषणरूप से अनुभव प्रमा है' ऐसा भी नहीं कह सकते क्योंकि रजतत्व भी कहीं ज्ञान का विशेष्य हो जाता है (जैसा रजतनिष्ठरजतत्व जानामि इत्यादि में)। 'जिस ज्ञान में जो विशेष्य होता है, उस विशेष्य में जो धर्म है, तद्धर्मप्रकारक अनुभव तद्धर्मविशिष्टविषयक प्रमा है' इस प्रकार कहना भी अयुक्त है, क्योंकि वह विकल्प को सहन नहीं कर सकता। तथाहि जिस ज्ञान में वस्तुगति से जो विशेष्य है, उसमें जो धर्म है इस प्रकार कहना चाहते हो ? अथवा जिस ज्ञान में जो विशेष्यरूप से प्रतीत होता है,

